श्रीगणेशायनमः॥ ॥अथगणेशसहस्रनामप्रारंभः
मुनिरुवाच॥ ॥कथंनाम्नांसहस्रंतुगणेशउपदिष्टवा-
न्॥शिवदंतन्ममाचक्ष्वलोकानुग्रहतत्पर॥१॥ब्रह्मोवा
च॥देवःपूर्वंपुरारातिःपुरत्रयजयोद्यमे॥ अनर्चनाद्गणे
शस्यजातोविघ्नाकुलःकिल॥ २ ॥मनसासविनिर्धार्य-
ददृशेविघ्नकारणं॥ महागणपतिंभक्त्यासमभ्यर्च्यय
थाविधि॥३॥विघ्नप्रशमनोपायमपृच्छदपरिश्रमं ॥
संतुष्टःपूजयाशंभोर्महागणपतिःस्वयम्॥४॥ सर्व-
विघ्नप्रशमनंसर्वकामफलप्रदं॥ ततस्तस्मैस्वयंनाम्नां
सहस्रमिदमब्रवीत्॥ ५॥ ॥अस्यश्रीमहागणप
तिसहस्रनामस्तोत्रमालामंत्रस्य॥गणेशऋषिः॥महा

गणपतिर्देवता ॥ नानाविधानिछंदांसि ॥ हुमितिबीजं
तुंगमितिशक्तिः ॥ स्वाहाशक्तिरितिकीलकं ॥ सकल
विघ्नविनाशनद्वारामहागणपतिप्रीत्यर्थजपेविनियो
गः ॥ ॥ श्रीमहागणपतिरुवाच ॥ ॥ गणेश्वरोगण
क्रीडोगणनाथोगणाधिपः ॥ एकदंतोवक्रतुंडोगजव-
क्त्रोमहोदरः ॥ ६ ॥ लंबोदरोधूम्रवर्णोविकटोविघ्नना-
शनः ॥ सुमुखोदुर्मुखोबुद्धोविघ्नराजोगजाननः ॥ ७ ॥
भीमः प्रमोदआमोदः सुरानंदोमदोत्कटः ॥ हेरंबः शंब
रः शंभुर्लंबकर्णोमहाबलः ॥ ८ ॥ नंदनोलंपटोभीमो
मेघनादोगणंजयः ॥ विनायकोविरूपाक्षोवीरः शूरवर
प्रदः ॥ ९ ॥ महागणपतिर्बुद्धिप्रियःक्षिप्रप्रसादनः ॥



रुद्रप्रियोगणाध्यक्षउमापुत्रोघनाशनः ॥ १० ॥ कुमा-
रगुरुरीशानपुत्रोमूषकवाहनः ॥ सिद्धिप्रियः सिद्धिप
तिः सिद्धः सिद्धिविनायकः ॥ ११ ॥ अविघ्नस्तुंबरुः सिं
हवाहनोमोहिनीप्रियः ॥ कटंकगोराजपुत्रः शाकलः
संमितोमितः ॥ १२ ॥ कूष्मांडसामसंभूतिर्दुर्जयोधू-
र्जयोजयः ॥ भूपतिर्भुवनपतिर्भूतानांपतिरव्ययः ॥
१३ ॥ विश्वकर्ताविश्वमुखोविश्वरूपोविधिर्गुणः ॥
कविः कवीनामृषभोब्रह्मण्योब्रह्मवित्प्रियः ॥ १४ ॥
ज्येष्ठराजोनिधिपतिर्निधिप्रियपतिप्रियः ॥ हिरण्
मयपुरांतस्थःसूर्यमंडलमध्यगः ॥ १५ ॥ कराहति-
ध्वस्तसिंधुसलिलः पूषदंतभित् ॥ उमांककेलिकुतु-

कीमुक्तिदःकुलपावनः॥१६॥किरीटीकुंडलीहारीवन-
मालीमनोमयः॥वैमुख्यहतदैत्यश्रीःपादगत्याजिन
क्षितिः॥१७॥सद्योजातःस्वर्णमुंजमेखलीदुर्निमि-
त्तहृत॥दुःस्वप्नदुष्टशमनोगुणीनादप्रतिष्ठितः१८
सुरूपःसर्वनेत्राधिवासोबिभ्राजिनूपुरः॥पीतांबरः
खंडरदःखंडवैशाखसंस्थितः॥१९॥चित्रांगःश्याम
दशनोभालचंद्रोहविर्भुजः॥योगाधिपस्तारकस्थःपु-
रुषोगजकर्णकः॥२०॥गणाधिराजोविजयस्थिरो-
गजपतिर्ध्वजी॥देवदेवःस्मरःप्राणदीपकोवायुकी-
लकः॥२१॥विपश्चिद्वरदोनादोनादभिन्नमहाचलः
वराहरदनोमृत्युंजयोव्याघ्राजिनांबरः॥२२॥इच्छा-



शक्तिभवोदेवत्रातादैत्यविमर्दनः॥शंभुवक्त्रोद्भ-
वःशंभुकोपजःशंभुहास्यभूः॥२३शंभुतेजाःशि
वाशोकहारीगौरीसुखावहः॥उमांगमलजोगौरीते
जोभूःस्वर्धुनीभवः॥२४॥मर्त्यकायोमहानादोगि-
रिवर्ष्मांशुभानननः॥सर्वात्मासर्वदेवात्माब्रह्ममूर्द्धा
ककुप्श्रुतिः॥२५॥ब्रह्मांडकुंभश्चिद्व्योमभालःस
त्यशिरोरुहः॥जगज्जन्मलयोन्मेषनिमेषोग्न्यर्कसो
मदृक्॥ २६ ॥ गिरींद्रैकरदोधर्मोधर्मिष्ठःसामबृंहि
तः॥ग्रहर्क्षदशनोवाणीजिह्वोवासवनासिकः२७
भ्रूमध्यसंस्थितकरोब्रह्मविद्यामदोदकः॥कुलाच-
लांसःसोमार्कघंटोरुद्रशिरोधरः॥२८॥नदीनदभु-

जः सर्पांगुलीकस्तारकानखः ॥ व्योमनाभिः श्रीहृद
योमेरुपृष्ठोर्णवोदरः २९ । कुक्षिस्थयक्षगंधर्वरक्षःकि
न्नरमानुषः ॥ पृथ्वीकटिः सृष्टिलिंगः शैलोरुर्दस्र-
जानुकः ॥ ३० ॥ पातालजंघोमुनिपात्कालांगुष्ठ-
स्त्रयीतनुः ॥ ज्योतिर्मंडललांगूलोहृदयालाननिश्च
लः ॥ ३१ ॥ हृत्पद्मकर्णिकाशालिवियत्केलिसरोवरः
॥ सद्भक्तध्याननिगडः पूजावारिनिवारितः ॥ ३२ ॥ प्र
तापीकाश्यपोमंतागणकोविष्टपीवली ॥ यशस्वी-
धार्मिकोजेताप्रथमः प्रथमेश्वरः ॥ ३३ ॥ चिंताम-
णिर्द्वीपपतिः कल्पद्रुमवनालयः ॥ रत्नमंडपमध्य-
स्थोरत्नसिंहासनाश्रयः ॥ ३४ ॥ तीव्राशिरोद्धृतपदो



ज्वालिनीमौलिलालितः ॥ नंदानंदितपीठश्रीर्भोगदो
भूषितासनः ॥ ३५ ॥ सकामदायिनीपीठः स्फुरदुग्रा
सनाश्रयः ॥ तेजोवतीशिरोरत्नसत्यानित्यावतंसि-
तः ॥ ३६ ॥ सविघ्ननाशिनीपीठः सर्वशक्त्यंबुजालयः
लिपिपद्मासनाधारोवन्हिधामत्रयालयः ॥ ३७ ॥ उ-
न्नत्तप्रपदोगूढगुल्फः संवृत्तपार्ष्णिकः ॥ मीनजंघः
श्लिष्टजानुः स्थूलोरुः प्रोन्नमत्कटिः ॥ ३८ ॥ निम्ननाभिः
भिः स्थूलकुक्षिः पीनवक्षाबृहद्भुजः ॥ पीनस्कंधः कंबु
कंठोलंबोष्ठोलंबनासिकः ॥ ३९ ॥ भग्नवामरदस्तुंग
सव्यदंतोमहाहनुः ॥ न्हस्वनेत्रत्रयः शूर्पकर्णोनिबि
डमस्तकः ॥ ४० ॥ स्तबकाकारकुंभाग्रोरत्नमौलिर्निरं

कुशः॥ सर्पहारकटीसूत्रः सर्पयज्ञोपवीतवान्॥४१ सर्प
कोटीरकटकः सर्पग्रैवेयकांगदः॥ सर्पकक्षोदराबंधः
सर्पराजोत्तरच्छदः॥४२॥ रक्तोरक्तांबरधरोरक्तमाला
विभूषणः॥ रक्तेक्षणोरक्तकरोरक्तताल्वोष्ठपल्लवः४३
श्वेतः श्वेतांबरधरः श्वेतमालाविभूषणः॥ श्वेतात-
पत्ररुचिरः श्वेतचामरवीजितः॥४४॥ सर्वावयवसंपू
र्णः सर्वलक्षणलक्षितः॥ सर्वाभरणशोभाढ्यः सर्व-
शोभासमन्वितः॥४५॥ सर्वमंगलमांगल्यः सर्वकार
णकारणं॥ सर्वदेववरः शार्ङ्गीबीजपूरीगदाधरः ४६
शुभांगोलोकसारंगः सुतंतुस्तंतुवर्द्धनः॥ किरीटीकुंड
लीहारीवनमालीशुभांगदः॥४७॥ इक्षुचापधरः शूली





चक्रपाणिः सरोजभृत्॥ पाशीधृतोत्पलः शालीमंज-
रीभृत्स्वदंतभृत्॥४८॥ कल्पवल्लीधरोविश्वाभयदैक
करोवशी॥ अक्षमालाधरोज्ञानमुद्रावान्मुद्गरायुधः॥
४९॥ पूर्णपात्रीकंबुधरोविधृतांकुशमूलकः॥ करस्था
म्रफलश्चूतकलिकाभृत्कुठारवान्॥५०॥ पुष्करस्थः स्व
र्णघटीपूर्णरत्नांबुवर्षकः॥ भारतीसुंदरीनाथोविना
यकरतिप्रियः॥५१॥ महालक्ष्मीप्रियतमः सिद्धल-
क्ष्मीमनोरमः॥ रमारमेशपूर्वांगोदक्षिणोमामहेश्वरः
५२॥ महीवराहवामांगोरतिकंदर्पपश्चिमः॥ आमोद
मोदजननः सप्रमोदप्रमोदनः॥५३॥ संवर्द्धितमहावृ-
द्धिर्ऋद्धिसिद्धिप्रवर्द्धनः॥ दंतसौमुख्यसुमुखः कांति

कंदलिताश्रयः॥ ५४॥ मदनावत्याश्रितांघ्रिः कृतवैमु-
ख्यदुर्मुखः॥ विघ्नसंपल्लवोपघ्नः सर्वोन्नितमदद्रवः॥
५५॥ विघ्नकृन्निम्नचरणोद्राविणीशक्तिसत्कृतः॥
तीव्राप्रसन्ननयनोज्वालिनीपालितैकदृक्॥ ५६॥ मो
हिनीमोहनोभोगदायिनीकांतिमंडनः॥ कामिनीकां
तवक्त्रश्रीरधिष्ठितवसुंधरः॥ अथवा:
तवक्त्रश्रीस्तेजिन्यधिष्ठितैकदिक्॥ ५७॥ वसुधाराम
दोन्नादोमहाशंखनिधिप्रियः॥ नमद्वसुमतीमौली
महापद्मनिधिप्रभुः॥ ५८॥ सर्वसद्गुरुसंसेव्यः शोचि
ष्केशहृदाश्रयः॥ ईशानमूर्द्धादेवेंद्र शिखः पवननंद-
नः॥ ५९॥ प्रत्युग्रनयनोदिव्योदिव्यास्त्रशतपर्वधृक्
ऐरावतादिसर्वाशावारणोवारणप्रियः॥ ६०॥ वज्रा-



द्यस्त्रपरीवारोगणचंडसमाश्रयः॥ जयाजयपरिकरो
विजयाविजयावहः॥ ६१॥ अजयार्चितपादाब्जोनि
त्यानंदवनस्थितः॥ विलासिनीकृतोल्लासः शौंडीसौं-
दर्यमंडितः॥ ६२॥ अनंतानंतसुखदः सुमंगलसुमंग
लः॥ ज्ञानाश्रयः क्रियाधारइच्छाशक्तिनिषेवितः ६३
सुभगासंश्रितपदोललितालिताश्रयः॥ कामिनी
पालनः कामकामिनीकेलिलालितः॥ ६४॥ सरस्वत्या
श्रयोगौरीनंदनः श्रीनिकेतनः॥ गुरुर्गुप्तपदोवाचासि
द्धोवागीश्वरीपतिः॥ ६५॥ नलिनीकामुकोवामारामो
ज्येष्ठामनोरमः॥ रौद्रीमुद्रितपादाब्जोहुंबीजस्तुंगश
क्तिकः॥ ६६॥ विश्वादिजननत्राणः स्वाहाशक्तिः सकी-

लकः॥अमृताब्धिकृतावासोमदघूर्णितलोचनः॥६७॥
उच्छिष्टोच्छिष्टगणकोगणेशोगणनायकः॥सार्वका
लिकसंसिद्धिर्नित्यसेव्योदिगंबरः॥६८॥अनपायोनं
तदृष्टिरप्रमेयोजरामरः॥अनाविलोप्रतिहतोह्यच्युतो
मृतमक्षरः॥६९॥अप्रतर्क्योक्षयोजय्योनाधारोनाम-
योमलः॥अमेयसिद्धिरद्वैतमघोरोग्निसमाननः७०
अनाकारोब्धिभूम्यग्निबलघ्नोव्यक्तलक्षणः॥आधार
पीठमाधारआधाराधेयवर्जितः॥७१॥आखुकेतन-
आशापूरकआखुमहारथः॥इक्षुसागरमध्यस्थइक्षु
पायसभक्षकः॥७२॥इक्षुचापातिरेकश्रीरिक्षुचाप-
निषेवितः॥इंद्रगोपसमानश्रीरिंद्रनीलसमद्युतिः७३



इंदीवरदलश्यामइंदुमंडलमंडितः॥इध्मप्रियइडाभा
गइडावानिंदिराप्रियः॥७४॥इक्ष्वाकुविघ्नविध्वंसी-
इतिकर्तव्यतोप्सितः॥ईशानमौलिरीशानईशानप्रि-
यईतिहा॥७५॥ईषणात्रयकल्पांतईहामात्रविवर्जि-
तः॥उपेंद्रउडुभृन्मौलिरुडुनाथकरप्रियः॥७६॥उन्न-
ताननउत्तुगउदारस्त्रिदशाग्रणीः॥ऊर्जस्वानुष्मलम
दऊहापोहदुरासदः॥७७॥ऋग्यजुःसामनयनऋद्धि
सिद्धिसमर्पकः॥ऋजुचित्तैकसुलभोऋणत्रयविमो
चनः॥७८॥लुप्तविघ्नःस्वभक्तानांलुप्तशक्तिःसुरद्वि
षां॥लुप्तश्रीर्विमुखार्चानांलूताविस्फोटनाशनः७९
ॐकारपीठमध्यस्थएणपीठकृतासनः॥एजितारिव

लदैत्यश्रीरेधिताखिलसंश्रयः॥ ८० ॥ऐश्वर्यनिधिरै
श्वर्यमैहिकामुष्मिकप्रदः॥ ऐरंमदसमोन्मेषऐराव
तसमाननः॥ ८१॥ ओंकारवाच्यओंकारओजस्वानो-
षधीपतिः॥ औदार्यनिधिरौद्धत्यधैर्यऔन्नत्यनिःस-
मः॥ ८२॥ अंकुशः स्फुरनागानामंकुशाकारसंस्थितः॥
अः समस्तविसर्गांतपदेषुपरिकीर्तितः॥ ८३॥ कमंड
लुधरः कल्पः कपर्दीकलभाननः॥ कर्मसाक्षीकर्मकर्त्ता
कर्माकर्मफलप्रदः॥ ८४॥ कदंबगोलकाकारः कूष्मांड
गणनायकः॥ कारुण्यदेहः कपिलः कथकः कटिसूत्र
भृत् ॥ ८५॥ खर्वः खड्गप्रियः खड्गः खांतांतस्थः खनिर्म
लः॥ खल्वाटशृंगनिलयः खट्वांगीखदुरासदः॥ ८६ ॥



गुणाढ्योगहनोगद्योगद्यपद्य सुधार्णवः॥ गद्यगान
प्रियोगर्जोगीतगीर्वाणपूर्वजः॥ ८७ ॥ गुह्याचार र-
तोगुह्योगुह्यागमनिरूपितः॥ गुहाशयोगुडाब्धि
स्थोगुरुगम्योगुरोर्गुरुः॥ ८८ ॥ घंटाघर्घरिकामाली
घटकुंभोघटोदरः॥ ङकारवाच्योङाकारोङकाराकारशुं
डभृत् ॥ ८९ ॥ चंडश्चंडेश्वरश्चंडीचंडेशश्चंडविक्रमः
चराचरपिताचिंतामणिश्चर्वणलालसः॥ ९० ॥ छंद-
श्छंदोद्भवश्छंदोदुर्लक्ष्य श्छंदविग्रहः॥ जगद्योनिर्जग-
त्साक्षीजगदीशोजगन्मयः॥ ९१॥ जप्योजपपरोजा-
प्योजिह्वासिंहासनप्रभुः॥ स्रवद्गंडोल्लसद्दानझंका-
रिभ्रमराकुलः॥ ९२॥ टंकारस्फारसंरावष्टंकारमणि

नूपुरः॥उद्दयःपल्लवांतस्थसर्वमंत्रेषुसिद्धिदः॥९३॥
डिंडिमुंडोडाकिनीशोडामरोडिंडिमप्रियः॥ढक्कानि-
नादमुदिरोढौंकोढुंढिविनायकः॥९४॥एकारवाच्यो
वागीशोविश्वात्माविश्वभावनः॥तत्त्वानांप्रकृतिस्त
त्वंतत्त्वंपदनिरूपितः॥९५॥तारकांतरसंस्थानस्तार
कस्तारकांतकः॥स्थाणुःस्थाणुप्रियस्थातास्थावरंजं
गमंजगत्॥९६॥दक्षयज्ञप्रमथनोदातादानंदमोदयः
दयावान्दिव्यविभवोदंडभृद्दंडनायकः॥९७॥दंतप्र-
भिन्नाभ्रमलोदैत्यवारणदारुणः॥दंष्ट्रालग्नद्वीपघटो
देवार्थनृगजाकृतिः॥९८॥धनंधनपतेर्बंधुर्धनदोधर-
णीधरः॥ध्यानैकप्रकटोध्येयोध्यानंध्यानपरायणः॥९९



ध्वनिप्रकृतिचित्कारोब्रह्मांडावलिमेखलः॥नंद्योनंदि-
प्रियोनादोनादमध्यप्रतिष्ठितः॥२००॥निष्कलोनिर्मलो
नित्योनित्यानित्योनिरामयः॥परंव्योमपरंधामपरमा
त्मापरंपदं॥२०१॥परात्परःपशुपतिःपशुपाशविमो-
चनः॥पूर्णानंदःपरानंदःपुराणपुरुषोत्तमः॥२०२॥प
द्मप्रसन्नवदनःप्रणताज्ञाननाशनः॥प्रमाणप्रत्यया-
तीतःप्रणतार्तिनिवारणः॥२०३॥फणिहस्तःफणिप
तिःफूत्कारःफणितप्रियः॥बाणार्चितांघ्रियुगलोबा
लकेलीकुतूहली॥२०४॥ब्रह्मब्रह्मार्चितपदोब्रह्मचा
रीबृहस्पतिः॥बृहत्तरोब्रह्मपरोब्रह्मण्योब्रह्मवित्प्रि-
यः॥२०५॥भ्रूक्षेपदत्तलक्ष्मीकोभर्गोभद्रोभयाप-

हः॥ भगवान्भक्तिसुलभोभूतिदोभूतिभूषणः॥१०६॥
भव्योभूतालयोभोगदाताभ्रूमध्यगोचरः॥ मंत्रोमंत्र
पतिर्मंत्रीमदमत्तोमनोमयः॥ १०७॥ मेखलाहीश्वरो
मंदगतिर्मंदनिभेक्षणः॥ महाबलोमहावीर्योमहा-
प्राणोमहामनाः॥ १०८॥ यज्ञोयज्ञपतिर्यज्ञगोप्ताय
ज्ञफलप्रदः॥ यशस्करोयोगगम्योयाज्ञिकोयाजक-
प्रियः॥ १०९॥ रसोरसप्रियोरस्योरंजकोरावणार्चि
तः॥ राज्यरक्षाकरोरत्नगर्भोराज्यसुखप्रदः॥ ११०॥
लक्षोलक्षपतिर्लक्ष्योलयस्थोलड्डुकप्रियः॥ लानप्रियो
लास्यपरोलाभकृल्लोकविश्रुतः॥ १११॥ वरेण्योवह्नि-
वदनोवंद्योवेदांतगोचरः॥ विकर्ताविश्वतश्चक्षुर्वि



धाताविश्वतोमुखः॥ ११२॥ वामदेवोविश्वनेताव-
ज्रिवज्रनिवारणः॥ विवस्वद्बंधनोविश्वाधारोविश्वे
श्वरोविभुः॥ ११३॥ शब्दब्रह्मशमप्राप्यःशंभुश
क्तिगणेश्वरः॥ शास्ताशिखाग्रनिलयःशरण्यःशंब
रेश्वरः॥ ११४॥ षड्ऋतुकुसुमःस्रग्वीषडाधारः
षडक्षरः॥ संसारवैद्यःसर्वज्ञःसर्वभेषजभेषजं॥
॥ ११५॥ सृष्टिस्थितिलयक्रीडःसुरकुंजरभेद
कः॥ सिंदूरितमहाकुंभःसदसद्व्यक्तिदायकः॥
॥ ११६॥ साक्षीसमुद्रमथनःस्वयंवेद्यःस्वदक्षि-
णः॥ स्वतंत्रःसत्यसंकल्पःसामगानरतःसुखी॥
॥ ११७॥ हंसोहस्तिपिशाचीशोहवनंहव्यकव्यभु

कृ ॥ हव्यंहुतप्रियोत्दृष्टोत्दृल्लेखामंत्रमध्यगः ॥ ११८
क्षेत्राधिपः क्षमाभर्ताक्षमाक्षमपरायणः ॥ क्षिप्रक्षे
मकरः क्षेमानंदः क्षोणीसुरद्रुमः ॥ ११९ ॥ धर्मप्रदो-
र्थदः कामदातासौभाग्यवर्धनः ॥ विद्याप्रदोविभव
दोभुक्तिमुक्तिफलप्रदः ॥ १२० ॥ अभिरूप्यकरोवीर
श्रीपदोविजयप्रदः ॥ सर्ववश्यकरोगर्भदोषहापुत्र
पौत्रदः ॥ १२१ ॥ मेधादः कीर्तिदः शोकहारीदौर्भाग्य
नाशनः ॥ प्रतिवादिमुखस्तंभोरुष्टचित्तप्रसादनः ॥
॥ १२२ ॥ पराभिचारशमनोदुःखहाबंधमोक्षदः ॥ ल
वस्त्रुटिः कलाकाष्ठानिमेषस्तत्परक्षणः ॥ १२३ ॥ घ
टीमुहूर्तः प्रहरोदिवानक्तमहर्निशं ॥ पक्षोमासर्तु





यनाब्दयुगंकल्पोमहालयः ॥ १२४ ॥ राशिस्तारातिथि
र्योगोवारः करणमंशकं ॥ लग्नंहोराकालचक्रंमेरुःसम
र्षयोध्रुवः ॥ १२५ ॥ राहुर्मंदः कविर्जीवोबुधोभौमः श
शीरविः ॥ कालः सृष्टिः स्थितिर्विश्वंस्थावरंजंगमंज-
गत् ॥ १२६ ॥ भूरापोग्निर्मरुद्व्योमाहंकृतिः प्रकृतिःपु
मान् ॥ ब्रह्माविष्णुः शिवोरुद्रईशः शक्तिः सदाशिवः ॥
॥ १२७ ॥ त्रिदशाः पितरः सिद्धायक्षारक्षांसिकिन्नराः
॥ सिद्धविद्याधराभूतामनुष्याः पशवः खगाः ॥ १२८
समुद्राः सरितः शैलाभूतंभव्यंभवोद्भवः ॥ सांख्यंपा
तंजलंयोगंपुराणानि श्रुतिःस्मृतिः ॥ १२९ ॥ वेदांगा-
निसदाचारोमीमांसान्यायविस्तरः ॥ आयुर्वेदोधनु-

वैदोगांधर्वकाव्यनाटकं ॥ १३० ॥ वैखानसंभागवतंमा
नुषंपंचरात्रकं ॥ शैवंपाशुपतंकालमुखंभैरवशास
नं ॥ १३१ ॥ शाक्तंवैनायकंसौरंजैनमार्हतसंहिता ॥ स
दसद्व्यक्तमव्यक्तंसचेतनमचेतनं ॥ १३२ ॥ बंधोमो-
क्षःसुखंभोगोयोगःसत्यमणुर्महान् ॥ स्वस्तिहुंफ-
ट्स्वधास्वाहाश्रौषट्वौषट्वषट्समः ॥ १३३ ॥ ज्ञा-
नविज्ञानमानंदोबोधःसंवित्समःशमः ॥ एकएका-
क्षराधारएकाक्षरपरायणः ॥ १३४ ॥ एकाग्रधीरेक-
वीरएकोनेकस्वरूपधृक् ॥ द्विरूपोद्विभुजोद्व्यक्षोद्वि
रदोद्वीपरक्षकः ॥ १३५ ॥ द्वैमातुरोद्विवदनोद्वंद्वहीनो
द्वयातिगः ॥ त्रिधामात्रिकरस्त्रेता त्रि वर्गफलदाय




कः ॥ १३६ ॥ त्रिगुणात्मात्रिलोकादि स्त्रिशक्तीशस्त्रि
लोचनः ॥ चतुर्विधवचोवृत्तिःपरिवृत्तिःप्रवर्तकः १३७
चतुर्मुखमयोपायश्चतुर्वर्णाश्रमाश्रयः ॥ चतुर्थी
पूजनप्रीतश्चतुर्थीतिथिसंभवः ॥ १३८ ॥ चतुर्बाहु-
श्चतुर्दंतश्चतुरात्माचतुर्भुजः ॥ पंचाक्षरात्मापंचा-
त्मापंचास्यःपंचकृत्तमः ॥ १३९ ॥ पंचाधारःपंचवर्णः
पंचाक्षरपरायणः ॥ पंचतालःपंचकरःपंचप्रणवमा
तृकः ॥ १४० ॥ पंचब्रह्ममयस्फूर्तिःपंचावरणवारि-
तः ॥ पंचभक्ष्यप्रियःपंचबाणःपंचशिखात्मकः ॥
॥ १४१ ॥ षट्कोणपीठःषट्चक्रधामाषड्ग्रंथिभेद-
कः ॥ षडंगध्वांतविध्वंसीषडंगुलमहाह्रदः ॥ १४२ ॥

षण्मुखः षण्मुखभ्राता षट्शक्तिपरिवारितः ॥ षड्वैरि
वर्गविध्वंसी षडूर्मिभयभंजनः ॥ १४३ ॥ षट्तर्कदूरः
षट्कर्मा षड्गुणः षड्रसाश्रयः ॥ सप्तपातालचरणः स-
प्तद्वीपोरुमंडलः ॥ १४४ ॥ सप्तस्वर्लोकमुकुटः सप्त
सप्तिवरप्रदः ॥ सप्तांगराज्यसुखदः सप्तर्षि-
गणवंदितः ॥ १४५ ॥ सप्तछंदोनिधिः सप्तहोत्रः सप्त
स्वराश्रयः ॥ सप्ताब्धिकेलिकासारः सप्तमातृनिषे-
वितः ॥ १४६ ॥ सप्तछंदोमोदमदः सप्तछंदोमखप्रभुः
॥ अष्टमूर्तिर्ध्येयमूर्तिरष्टप्रकृतिकारणं ॥ १४७ ॥
अष्टांगयोगफलभृदष्टपत्रांबुजासनः ॥ अष्टशक्ति
समानश्रीरष्टैश्वर्यप्रवर्धनः ॥ १४८ ॥ अष्टपीठोपपी



ठश्रीरष्टमातृसमावृतः ॥ अष्टभैरवसेव्योष्टवसुवंद्योष्ट
मूर्तिभृत् ॥ १४९ ॥ अष्टचक्रस्फुरन्मूर्तिरष्टद्रव्यहवि-
प्रियः ॥ अष्टश्रीरष्टसामश्रीरष्टैश्वर्यप्रदायकः ॥ न
वनागासनाध्यासीनवनिध्यनुशासितः ॥ १५० ॥ नव-
द्वारपुरावृत्तोनवद्वारनिकेतनः ॥ नवनाथमहानाथोन
वनागविभूषितः ॥ १५१ ॥ नवनारायणस्तुत्योनव-
दुर्गानिषेवितः ॥ नवरत्नविचित्रांगोनवशक्तिशिरो-
धृतः ॥ १५२ ॥ दशात्मकोदशभुजोदशादिक्पतिवंदि-
तः ॥ दशाध्यायोदशप्राणोदशेंद्रियनियामकः ॥ १५३
दशाक्षरमहामंत्रोदशाशाव्यापिविग्रहः ॥ एकादश-
महारुद्रैस्तुतश्चैकादशाक्षरः ॥ १५४ ॥ द्वादशाद्विद-

शाष्टादिदोर्दंडास्त्रनिकेतनः॥त्रयोदशाभिदाभिन्नो-
विश्वेदेवाधिदैवतं॥१५५॥चतुर्दशेंद्रवरदश्चतुर्दशा-
मनुप्रभुः॥चतुर्दशाद्यविद्याढ्यश्चतुर्दशजगत्पतिः
॥१५६॥सामपंचदशः पंचदशीशीतांशुनिर्मलः॥
तिथिपंचदशाकारस्तिथ्यापंचदशार्चितः॥१५७॥षो
डशाधारनिलयःषोडशस्वरमातृकः॥षोडशांतपदा
वासःषोडशेंदुकलात्मकः॥१५८॥कलासप्तदशीस-
प्तदशासप्तदशाक्षरः॥अष्टादशद्वीपपतिरष्टादशापु
राणकृत्॥१५९॥अष्टादशौषधीसृष्टिरष्टादशावि-
धिःस्मृतः॥अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोवि-
दः॥१६०॥अष्टादशान्नसंपत्तिरष्टादशविजातिकृत्



एकविंशःपुमानेकविंशत्यंगुलिपल्लवः॥१६१॥चतुर्विं
शतितत्वात्मापंचविंशाख्यपूरुषः॥सप्तविंशतितारे
शःसप्तविंशतियोगकृत्॥१६२॥द्वात्रिंशद्भैरवाधी-
शश्चतुस्त्रिंशन्महाह्रदः॥षट्त्रिंशत्तत्त्वसंभूतिरष्ट-
त्रिंशत्कलात्मकः॥१६३॥पंचाशद्विष्णुशक्तीशः पं-
चाशन्मातृकालयः॥द्विपंचाशद्वपुःश्रेणीत्रिषष्ट्यक्ष
रसंश्रयः॥ पंचाशदक्षरश्रेणीपंचाशद्रुद्रविग्रहः ६४
चतुःषष्टिमहासिद्धियोगिनीवृंदवंदितः॥नमेदेको
नपंचाशन्मरुद्वर्गनिरर्गलः॥१६५॥चतुःषष्ट्यर्थ-
निर्णेताचतुःषष्टिकलानिधिः॥अष्टषष्टिमहातीर्थ
क्षेत्रभैरववंदितः॥१६६॥चतुर्नवतिमंत्रात्माषण्ण

वत्यधिकप्रभुः॥शतानंदःशतधृतिःशतपत्रायतेक्षणः
॥१६७॥शतानीकःशतमखःशतधारवरायुधः॥सह-
स्रपत्रनिलयःसहस्रफणिभूषणः॥ १६८॥सहस्र-
शीर्षापुरुषःसहस्राक्षःसहस्रपात्॥सहस्रनामसं-
स्तुत्यःसहस्राक्षबलापहः॥१६९॥दशसाहस्रफणि
भृत्फणिराजकृतासनः॥अष्टाशीतिसहस्राद्यमहर्षि
स्तोत्रपाठितः॥१७०॥लक्षाधारःप्रियाधारोलक्षाधा
रमनोमयः॥चतुर्लक्षजपप्रीतश्चतुर्लक्षप्रकाशकः
॥१७१॥चतुराशीतिलक्षाणांजीवानांदेहसंस्थितः
कोटिसूर्यप्रतीकाशःकोटिचंद्रांशुनिर्मलः॥१७२॥
शिवोद्भवाध्यष्टकोटिवैनायकधुरंधरः॥सप्तकोटिम



हामंत्रमंत्रितावयवद्युतिः॥ १७३॥त्रयस्त्रिंशत्को-
टिस्फुरच्छ्रेणीप्रणतपादुकः॥अनंतदेवतासेव्योह्यनंत
शुभदायकः॥१७४॥अनंतनामानंतश्रीरनंतोनंत-
सौख्यदः॥अनंतशक्तिसहितोह्यनंतमुनिसंस्तुतः॥
१७५॥इतिवैनायकंनाम्नांसहस्रमिदमीरितं॥इदंब्रा-
ह्मेमुहूर्तेयःपठतिप्रत्यहंनरः॥१७६॥करस्थंतस्यस
कलमैहिकामुष्मिकंसुखं॥आयुरारोग्यमैश्वर्यंधैर्यं
शौर्यंबलंयशः॥ १७७॥मेधाप्रज्ञाधृतिःकांतिःसौ-
भाग्यमभिरूपता॥सत्यंदयाक्षमाशांतिर्दाक्षिण्यं-
धर्मशीलता॥१७८॥जगत्संवननंविश्वसंवादोवेदपा
टवं॥सभापांडित्यमौदार्यंगांभीर्यंब्रह्मवर्चसं॥७९॥

ओजस्तेजः कुलं शीलं प्रतापो वीर्यमार्यता ॥ ज्ञानं विज्ञा
नमास्तिक्यं स्थैर्यं विश्वासनातथा ॥ १८० ॥ धनधान्या
दिवृद्धिश्च सकृदस्य जपाद्भवेत् ॥ वश्यं चतुर्विधं विश्वं
जपादस्य प्रजायते ॥ १८१ ॥ राज्ञो राजकलत्रस्य राज
पुत्रस्य मंत्रिणः ॥ जप्यते यस्य वश्यार्थे स दासस्तस्य
जायते ॥ १८२ ॥ धर्मार्थकाममोक्षाणामनायासेन-
साधनं ॥ शाकिनीडाकिनीरक्षोयक्षग्रहभयापहं ॥
१८३ ॥ साम्राज्यसुखदं सर्वसपत्नमदमर्दनं ॥ सम
स्तकलहध्वंसि दग्धबीजप्ररोहणं ॥ १८४ ॥ दुःस्वप्नश
मनं क्रुद्धस्वामिचित्तप्रसादनं ॥ षड्वर्गाष्टमहासिद्धि
त्रिकालज्ञानकारणं ॥ १८५ ॥ परकृत्यप्रशमनं परचक्र



प्रमर्दनं ॥ संग्राममार्गे सर्वेषामिदमेकं जयावहं ॥ १८६
सर्ववंध्यत्वदोषघ्नं गर्भरक्षैककारणं ॥ पठ्यते प्रत्यहं-
यत्र स्तोत्रं गणपतेरिदं ॥ १८७ ॥ देशे तत्र न दुर्भिक्षमी
तयो दुरितानि च ॥ न तद्गेहं जहाति श्रीर्यत्रायं जप्यते-
स्तवः ॥ १८८ ॥ क्षयकुष्ठप्रमेहार्शभगंदरविषूचिकाः
गुल्मप्लीहानवल्मीकमतिसारं महोदरं ॥ १८९ ॥ का
संश्वासं गुदावर्तं शूलं शोफामयोदरं ॥ शिरोरोगं व-
मिं हिक्कां गंडमालामरोचकं ॥ १९० ॥ वातपित्तकफ-
द्वंद्वत्रिदोषजनितज्वरं ॥ आगंतुविषमं शीतमुष्णं चै
काहिकादिकं ॥ १९१ ॥ इत्याद्युक्तमनुक्तं वा रोगदोषा
दिसंभवं ॥ सर्वं प्रशमयत्याशु स्तोत्रस्यास्य सकृज्ज

पः॥१९२॥प्राप्यतेस्यजपात्सिद्धिःस्त्रीशूद्रैःपतितैर-
पि॥सहस्रनाममंत्रोयंजपितव्यःशुभाप्तये॥१९३॥
महागणपतेस्तोत्रंसकामःप्रजपन्निदं॥इच्छयासक
लान्भोगानुपभुज्येहपार्थिवान्॥१९४॥मनोरथफ
लैर्दिव्यैर्व्योमयानैर्मनोरमैः॥चंद्रेंद्रभास्करोपेंद्रब्रह्म-
शर्वादिसद्मसु॥१९५॥कामरूपःकामगतिःकामदः
कामदेश्वरः॥भुक्त्वायथेप्सितान्भोगानभीष्टैःसह
बंधुभिः॥१९६॥गणेशानुचरोभूत्वागणोगणपति
प्रियः॥नंदीश्वरादिसानंदैर्नंदितःसकलैर्गणैः१९७
शिवाभ्यांकृपयापुत्रनिर्विशेषंचलालितः॥शिवभ
क्तःपूर्णकामोगणेश्वरवरात्पुनः॥१९८॥जातिस्म-



रोधर्मपरःसार्वभौमोभिजायते॥निष्कामस्तुजपन्नि
त्यंभक्त्याविघ्नेशतत्परः॥१९९॥योगसिद्धिंपरांप्रा-
प्यज्ञानवैराग्यसंयुतः॥निरंतरेनिराबाधेपरमानंद
संज्ञिते॥२००॥विश्वोत्तीर्णेपरेपूर्णेपुनरावृत्तिवर्जि
ते॥लीनोवैनायकेधाम्निरमतेनित्यनिर्वृते॥२०१॥
योनामभिर्हुनेदेतैःपूजयेदर्चयेन्नरः॥राजानोवश्या
तांयांतिरिपवोयांतिदासतां॥ २०२॥तस्यसिद्ध्यं
तिमंत्राणांदुर्लभाश्चेष्टसिद्धयः॥मूलमंत्रादपिस्तो
त्रमिदंप्रियतमंमम॥ २०३॥नभस्येमासिशुक्ला
यांचतुर्थ्यांममजन्मनि॥दूर्वाभिर्नामभिःपूजांतर्प-
णंविधिवच्चरेत॥२०४॥अष्टद्रव्यैर्विशेषेणकुर्या-

द्भक्तिस्संयुतः॥ नस्येप्सितंधनंधान्यमैश्वर्यंविजयो
यशः॥ २०५॥ भविष्यतिनसंदेहःपुत्रपौत्रादिकंसु-
खं॥ इदंप्रजपितंस्तोत्रंपठितंश्रावितंश्रुतं॥ २०६ व्या
कृतंचर्चितंध्यातंविमृष्टमभिवंदितं॥ इहामुत्रचवि-
श्वेषांविश्वैश्वर्यप्रदायकं॥ २०७॥ स्वच्छंदचारिणाप्ये-
षोयेनसंधार्यतेस्तवः॥ सरक्ष्यतेशिवोद्भूतैर्गणैरध्यष्ट
कोटिभिः॥ २०८॥ लिखितंपुस्तकस्तोत्रंमंत्रभूतंप्रपू-
जयेत्॥ तत्रसर्वोत्तमालक्ष्मीःसन्निधत्तेनिरंतरं॥ २०९॥
दानैरशेषैरखिलैर्व्रतैश्चतीर्थैरशेषैरखिलैर्मखैश्च
॥ नतत्फलंविंदतियद्गणेशसहस्रनामस्मरणेनसद्यः
॥ २१०॥ एतन्नाम्नांसहस्रंपठतिदिनमणौप्रत्यहंप्रो





ज्जिहानेसायंमध्यंदिनेवात्रिषवणमथवासंततंवा
जनोयः॥ सस्यादैश्वर्यधुर्यःप्रभवतिवचसांकीर्ति-
मुच्चैस्तनोतिदारिद्र्यंहंतिविश्वंवशयतिसुचिरंवर्द्ध
तेपुत्रपौत्रैः॥ २११॥ अकिंचनोप्येकचित्तोनियतो-
नियतासनः॥ प्रजपंश्चतुरोमासान्गणेशार्चनत-
त्परः॥ २१२॥ दरिद्रतांसमुन्मूल्यसप्तजन्मानुगाम-
पि॥ लभतेमहतींलक्ष्मीमित्याज्ञापारमेश्वरी॥ २१३
आयुष्यंवीतरोगंकुलमतिविमलंसंपदश्चार्तिनाशः
कीर्तिर्नित्यावदाताभवतिखलुनवाकांतिरव्याजभ
व्या॥ पुत्राःसंतःकलत्रंगुणवदभिमतंयद्यदन्यच्च-
तत्तन्नित्यंयस्तोत्रमेतत्पठतिगणपतेस्तस्यहस्ते-

समस्तं ॥ २१४ ॥ गणंजयोगणपतिर्हेरंबोधरणीधरः
महागणपतिर्बुद्धिप्रियक्षिप्रप्रसादनः ॥ २१५ ॥ अ
मोघसिद्धिरमृतमंत्रश्चिंतामणिर्निधिः ॥ सुमंगलो
बीजमाशापूरकोवरदःकलः ॥ २१६ ॥ काश्यपोनंद-
नोवाचासिद्धोढौंढिविनायकः ॥ मोदकैरेभिरत्रैक
विंशत्यानामभिःपुमान् ॥ २१७ ॥ उपायनंददेद्भक्त्या
मत्प्रसादंचिकीर्षति ॥ वत्सरंविघ्नराजोस्यतथ्यमि
ष्टार्थसिद्धये ॥ २१८ ॥ यस्तौतिमद्गतमनामामाराधन
तत्परः ॥ स्तुतोनाम्नांसहस्रेणतेनाहंनात्रसंशयः ॥
२१९ ॥ नमोनमःसुरवरपूजितांघ्रयेनमोनमोनिरु
पममंगलात्मने ॥ नमोनमोविपुलदयैकसिद्धये-



नमोनमःकरिकलभाननायते ॥ २२० ॥ किंकिणीग-
णरचितचरणःप्रकटितगुरुमितचारुकरणः ॥ म
दजललहरीकलितकपोलःशमयतुदुरितंगणप-
तिर्नृपनाम्ना ॥ २२१ ॥ इतिश्रीगणेशपुराणेउपास
नाखंडेईश्वरगणपतिसंवादेगणेशसहस्रनामस्तो
त्रकथनंनामसप्तच०ध्यायः ॥ श्रीगणेशार्पणमस्तु ॥

हेंपुस्तक पुणें पेठ सदाशिव येथें नारोआपाजी गोडबोले यांचे
वृत्तप्रसारक छा० छा० ता० १ सप्० १८८५ इ० आवृत्ति २री ॥ ७ ॥

